अथचित्त्युपनिषत्प्रारंभः । श्रीग[illegible]ननप्रसन्नः । । श्रीसरस्वतीप्रसन्ना । हरिः ॐतच्छंयोरावृणीमहे । गातुंयज्ञाय । गातुंयज्ञपतये । दैवीःस्वस्तिरस्तुनः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वंजिगातुभेषजं । शन्नोअस्तुद्विपदे । शंचतुष्पदे । ॐशांतिः शांतिः । शांतिः । ॐ चितिस्रुक् । चित्तमाज्यं । वाग्वेदिः । आधीतंबर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मनउपवक्ता । प्राणोहविः । सामाध्वर्युः । वाचस्पतेविधेनामन् । विधेमतेनाम । विधेस्तुमस्माकंनाम । वाचस्पतिःसोमंपिबतु । आस्मासुनृम्णंधात्स्वाहा १ अध्वर्युःपंचच १ पृथिवीहोता । द्यौरध्वर्युः । रुद्रोग्नीत् । बृहस्पतिरुपवक्ता । वाचस्पतेवाचोवीर्येण । सभृततमेनायक्ष्यसे । यजमानायवार्यं । आसुवस्करस्मै । वाचस्पतिःसोमंपिबति । जजनदिंद्रमिंद्रियायस्वाहा १ पृथिवीहोतादश २ अग्निर्होता । अश्विनाध्वर्यु । त्वष्टाग्नीत् । मित्रउदवक्ता । सोमःसोमस्यपुरोगाः । शुक्रःशुक्रस्यपुरोगाः । श्रातास्तइंद्रसोमाः । वा-

तांपेर्हवनः श्रुतःस्वाहा। अग्निर्होताष्टौ ३ सूर्यंतेचक्षुः। वातंप्राणः। द्यांपृष्ठं। अंत-
रिक्षमात्मा। अंगैर्यज्ञं। पृथिवी*शरीरैः। वाचस्पतेछिद्रयावाचा। अछिद्रयाजि-
व्हा। दिविदेवावृध*होत्रामेरयस्वस्वाहा ४ सूर्यंतेनवा ४ महाहंविर्होता। सत्या
हविरध्वर्युः। अच्युतपाजाअग्नीत्। अच्युतमनाउपवक्ता। अनाधृष्यश्चाप्रति
धृष्यश्चयज्ञस्याभिगरौ। अयस्यंउद्गाता। वाचस्पतेहृद्विधेनामन्। विधेमंतेनामं
विधेस्त्वमस्माकंनामं। वाचस्पतिःसोमंपात्। मादेव्यस्तंतुच्छेदिमामनुष्यः।
नमोदिवे। नमःपृथिव्यैस्वाहा १ अपात्रीणिच ५ वाघोता। दीक्षापत्नी। वातो
ध्वर्युः। आपोभिगरः। मनोहविः। तपसिजुहोमि। भूर्भुवःसुवः। ब्रम्हस्वयंभूः
ब्रह्मणेस्वयंभुवेस्वाहा १ वाघोतानवा ६ ब्राम्हणएकहोता। सयज्ञः। समेददा-
तुप्रजांपशून्पुष्टिंयशः। यज्ञश्चमेभूयात्। अग्निर्द्विहोता। सभर्ता। समेददातुप्र
जांपशून्पुष्टिंयशः। भर्ताचमेभूयात्। पृथिवीत्रिहोता। सप्रतिष्ठा १ समेददातु

प्रजांपशून्पुष्टिंयशः । प्रतिष्ठाचमेभूयात् । अंतरिक्षंचतुर्होता । सविष्ठाः । समेद
दातुप्रजांपशून्पुष्टिंयशः । विष्ठाश्चमेभूयात् । वायुःपंचहोता । सप्राणः । समेद-
दातुप्रजांपशून्पुष्टिंयशः । प्राणश्चमेभूयात् १ चंद्रमाःषड्ढोता॥ सऋतूनकल्पया-
मि । समेददातुप्रजांपशून्पुष्टिंयशः । ऋतवश्चमेकल्पंतां । अन्नꣳसप्तहोता । स-
प्राणस्यंप्राणः । समेददातुप्रजांपशून्पुष्टिंयशः । प्राणस्यंचमेप्राणोभूयात् । द्यौ
रष्टहोता । सोनाधृष्यः १ समेददातुप्रजांपशून्पुष्टिंयशः । अनाधृष्यश्चभूयासं।
आदित्योनवहोता । सतेजस्वी । समेददातुप्रजांपशून्पुष्टिंयशः । तेजस्वीचभू-
यासं । प्रजापतिर्दशहोता । सइदꣳसर्वं । समेददातुप्रजांपशून्पुष्टिंयशः । सर्वं
चमेभूयात् ४ प्रतिष्ठाप्राणश्चमेभूयादनाधृष्यः । सर्वंचमेभूयात् ४ ब्राम्हणोय-
ज्ञोग्निर्भर्ता । पृथिवीप्रतिष्ठांतरिक्षंविष्ठा । वायुःप्राणश्चंद्रमाऋतूनन्नꣳसप्राणस्यं
प्राणोद्यौरनाधृष्यआदित्यः । सतेजस्वीप्रजापतिःसइदꣳसर्वꣳसर्वंचमेभूयात्।

१ अग्निर्यजुर्भि । सवितास्तोमैः । इंद्रउक्थामदैः । मित्रावरुणावाशिषा । अंगिर
सोधिष्ण्यैराग्निभिः । मरुतःसदोहविर्धानाभ्यां । आपःप्रोक्षणीभिः । औषधयो
बर्हिषा । अदितिर्वेद्या । सोमोदीक्षया । अदितिर्वेद्या । सोमोदीक्षया । त्वष्टेध्मेन ।
विष्णुर्यज्ञेन । वसव आज्येन । आदित्यादक्षिणाभिः । विश्वेदेवाऊर्ज्जा । पूषास्वग
कारेण । बृहस्पतिःपुरोधया । प्रजापतीरुद्गीथेन । अंतरिक्षंपवित्रेण । वायुःपात्रैः ।
अहःश्रद्धया २ दीक्षयापात्रैरेकंच ८ सेनेंद्रस्य । धेनाबृहस्पतेः । पथ्यांपूष्णः । वा
ग्वायोः । दीक्षासोमस्य । पृथिव्यग्नेः । वसूनांगायत्री । रुद्राणांत्रिष्टुप् । आदित्यानां
जगती । विष्णोरनुष्टुक् १ वरुणस्यविराट् । यज्ञस्यपंक्तिः । प्रजापतेरनुमतीः । मि
त्रस्यश्रद्धा । सवितुःप्रसूतिः । सूर्यस्यमरीचिः । चंद्रमसोरोहिणी । ऋषीणामरुंध
ती । पर्जन्यस्याविद्युत् । चतस्रोदिशः । चतस्रोवांतादिशाः । अहश्चरात्रिश्च । कृषि-
श्चवृष्टिश्च । त्विषिश्चापचिचितिश्च । आपश्चौषधयश्च । उर्क्कसूनृतांचदेवानांपत्नं-

चि. ३ | यः १ अनुष्टुग्दिशःषट्र्चा १ देवस्यत्वासवितुःप्रसवे । अश्विनोर्बाहुभ्यां। पूष्णो | उ २

हस्ताभ्यांप्रतिंगृह्णामि । राजांत्वावरुणोनयतुदेविदक्षिणेग्नयेहिरण्यं। तेनामृतत्व

मश्यां । वयोदात्रे । मयोमह्यमस्तुप्रतिग्रहीत्रे । कइदंकस्मांदात् । कामःकामाय ।

कामोदाता १कामः प्रतिग्रहीता । काम समुद्रमाविंश। कामेनत्वाप्रतिंगृह्णामि।

कामैतत्ते। एषातेकामदक्षिणा। उत्तानस्त्वांगीरसः। प्रतिंगृह्णातु। सोमायवासः।

रुद्रायगां। वरुणायाश्वं। प्रजापतयेपुरुषं १ मनवेतल्पं। त्वष्ट्रेजां। पूष्णेविं। नि-

र्ऋत्याअश्वतरगर्दभौ। हिमवंतोहस्तिनं। गंधर्वाप्सराभ्यःसृगलंकरणे। विश्वेभ्यो

देवेभ्योधान्यं। वाचेन्नं। ब्रह्मणओदनं। समुद्रायापः ३ उत्तनायांगीरसायानः। वै-

श्वानरायरथं। वैश्वानरःप्रत्नथानाकमारुहत्। दिवपृष्ठंभंदमानःसुमन्मभिः। स-

पूर्ववज्जनयंजंतवेधनं। समानमंज्मापरियातिजागृविः। राजांत्वावरुणोनयतुदे- | ३

विदक्षिणेवैश्वानरायरथं। तेनामृतत्वमश्यां। वायोदात्रे। मयोमह्यमस्तुप्रतिग्रही

त्रे। कइदंकस्मादात्। कामःकामाय। कामोदाता। कामःप्रतिग्रहीता। कामश्समु
द्रमाविश। कामेनत्वाप्रतिगृण्हामि। कामैतत्ते। एषातेकामदक्षिणा। उत्तानस्त्वां
गीरसः। प्रतिगृण्हातु ५ दातापुरुषप्रापः। प्रतिग्रहीत्रेनवंच १० सुवर्णंघर्मंपरिवे
दवेनं। इंद्रस्यात्मानंदशधाचरंतं। अंतःसमुद्रेमनसाचरंतं। ब्रह्मान्वंविदद्दशंहो
तारमर्णे। अंतःप्रविष्टशास्ताजनानां। एकःसन्बहुधाविचारः। शतश्शुक्राणिय
त्रेकंभवंति। सर्वेवेदायत्रेकंभवंति। सर्वेहोतारोयत्रेकंभवंति। समानंसीनआत्मा
जनानां १ अंतःप्रविष्टःशास्ताजनानाश्सर्वात्मा। सर्वाःप्रजायत्रैकंभवंति। च-
तुर्होतारोयत्रसंपदंगच्छंतिदेवैः। समानंसीनआत्माजनानां। ब्रह्मेंद्रमाग्निंजगतः
प्रतिष्ठां। दिवआत्मांश्सवितारंबृहस्पतिं। चतुर्होतारंप्रदिशोनुक्लृप्तं। वाचोवीर्यं
तपसान्वंविदत्। अंतःप्रविष्टंकर्तारमेतं। त्वष्टारश्रूपाणिविकुर्वंतंविपश्चिं २ अ
मृतस्यप्राणंयज्ञमेतं। चतुर्होतृणामात्मानंकवयोनिचिक्युः। अंतःप्रविष्टंकर्तारं

मेतं । देवानांबंधुनिहितंगुहासु । अमृतेनक्लृप्तंयज्ञमेतं । चतुर्होतृणामात्मानंकव-
योनिचिक्युः । शतंनियुतःपरि । वेदविश्वाविश्ववारः । विश्वमिदंवृणाति । इंद्रस्या
त्मानिहितःपंचहोता । अमृतंदेवानामायुःप्रजानां ३ इंद्रꣳराजानꣳसवितारमेतं ।
वायोरात्मानंकवयोनिचिक्युः । रश्मिꣳरश्मीनांमध्येतपंतं । ऋतस्यपदेकवयो
निपांति । यआंडकोशेभुवनंबिभर्ति । अनिर्भिण्णःसन्नथलोकान्विचष्टे । यस्यां-
डकोशꣳशुष्ममाहुःप्राणामुल्बं । तेनक्लृप्तोमृतेनाहमस्मि । सुवर्णकोशꣳरजसापरी
वृतं । देवानांवसुधानींविराजं ४ अमृतस्यपूर्णांतामुकल्पांविचक्षते । पादꣳषड्ढोतुर्न
किलाविविसे । येनर्त्तवःपंचधोतक्लृप्तः । उतवाषडधामनसोतक्लृप्ताः । तꣳषड्ढोता
रमृतुभिःकल्पमानं । ऋतस्यपदेकवयोनिपांति । अंतःप्रविष्टंकर्तारमेतं । अंतश्चंद्र
मसिमनसाचरंतं । सहैवसंतंनविजानंतिदेवाः । इंद्रस्यात्मानꣳशतधाचरंतं ५ इंद्रो
राजाजगतोयईशे । सप्तहोतासप्तधाविक्लृप्तः । परेणतंतुंपरिषिच्यमानं । अंतरादि

४

त्येमनंसाचरंतं । देवाना श्च्हृदयंब्रह्मान्वंविंदत् । ब्रम्हैतन्ब्रह्मणउज्जंभार । अर्क श्च्योतंत श्शरिरस्यमध्ये । आयस्मिनत्सप्तपेरंवः । मेहंतिबहुला श्श्रियं । बव्हश्वा मिंद्रगोमंतीं ६ अच्युतांबहुला श्श्रियं । सहरिर्वसुवित्तमः । पेरुरींद्रांयपिन्वते । ब- व्हश्वामिंद्रगोमंतीं । अच्युतांबहुला श्श्रियं । मह्यमिंद्रोनियंछतु । शत श्शताअंस्य युक्ताहरीणां । अर्वाङ्गाथांतुवसुभिरश्मिरिंद्रः । प्रम श्हंमाणोबहुला श्श्रियं । रश्मिरिं द्रंसवितामेनियंछतु ७ घृतंतेजोमधुमदिंद्रियं । मय्ययमग्निर्दंधातु । हरिः पतंगः पं टरीसुपर्णः । दिवीक्षयोनभंसायएंति । सनइंद्रः कामवरंददातु । पंचारंचक्रंपरिव र्ततेपृथु । हिरंण्यज्योतिःसरिरस्यमध्ये । अजंस्रंज्योतिर्नभंसासर्पदेति । सनइंद्रः कामवरंददातु । सप्तयुंजंतिरथमेकंचक्रं ८ एकोअश्वोवहतिसप्तनामा । त्रिनाभिंच क्रमजरमनंर्वं । येनेमाविश्वाभुवनानितस्थुः । भद्रंपश्यंतउपंसेदुरग्रे । तपोदीक्षा मृषंयःसुवर्विदः । ततःक्षत्रंबलमोजश्चजातंतदस्मैदेवाअभिसन्नमंतु । श्वेत श्र

ङिमभोभुज्यमानं। अपानितारंभुवंनस्यगोपां। इंद्रंनिचिक्युःपरमेव्योमन्। ९।
रोहिणीःपिंगलाएकंरूपाः। क्षरंतीःपिंगलाएकंरूपाः। शत" सहस्राणिप्रयुतानि
नाव्यांनां। अयंयःश्वेतोरश्मीः। परिसर्वैमिदंजगत्। प्रजांपशूंधनांनि। अस्मा
कंददातु। श्वेतोरश्मिः। परिसर्वैबभूव। सुवन्मह्यंपशून्विश्वरूपान्। पतंगमक्त
मसुरस्यमायया १० हृदापश्यंतिमनसामनीषिणः। समुद्रेअंतःकवयोविचक्षते।
मरीचीनांपदमिंछंतिवेधसः। पतंगोवाचंमनसाबिभर्ति। तांगंधर्वोवददर्भेअंतः
तांद्योतमना"स्वर्यैमानीषां। ऋतस्यपदेकवयोनिपांति। येग्राम्याःपशवोविश्वरू
पाः। विरूपाःसंतोबहुधैकरूपाः। अग्निस्ता"अग्रेप्रमुमोक्तदेवः ११ प्रजापतिः
प्रजयासंविदानः। वीत"स्तुकेस्तुके। युवमस्मासुनियंछतं। प्रप्रयज्ञपतिंतिरा।
येग्राम्याःपशवोविश्वरूपाः। विरूपाःसंतोबहुधैकरूपाः। तेषा"सप्तानामिहरं
तिरस्तु। रायस्पोषांयसुप्रजास्त्वायंसुवीर्याय। यआरण्याःपशवोविश्वरूपाः। वि

रूपाःसंतोबहुधैकरूपाः १२ वायुस्ता॑अग्रेप्रमुमोक्तदेवः । प्रजापतिःप्रजयां संविदानः । इडायैसृप्तंघृतवं॑श्चराचरं। देवान्वंविंदन्गुहाहितं। यआरण्याःपश- वोविश्वरूपाः। विरूपाःसंतोबहुधैकरूपाः । तेषा॑सप्तानामिहरंतिरस्तु । राय- स्पोषायसुप्रजास्त्वायंसुवीर्याय १३ आत्माजनानांविकुर्वंतंविपश्चिं । प्रजानांव- सुधानीविराजंचरंतं । गोमंतींमेनियंछत्वेकंचक्रं । व्योमन्माययांदेवएकरूपाअ- ष्टांच १४ सहस्रशीर्षापुरुषः । सहस्राक्षःसहस्रपात् । सभूमिंविश्वतोवृत्वा । अ- त्यंतिष्ठद्दशांगुलं । पुरुषएवेद॑सर्वं । यद्भूतंयच्चभव्यं । उतामृतत्वस्येशानःयद- न्नेनातिरोहति। एतावानस्यमहिमा। तोज्यायां॑श्चपूरुषः १५पादोस्यविश्वाभूता नि । त्रिपादस्यामृतंदिवि । त्रिपादूर्ध्वउदैत्पुरुषः । पादोस्येहाभवात्पुनः।ततोवि- ष्व॑व्यक्रामत् । साशनानशनेअभि । तस्माद्विराडजायत । विराजोअधिपूरुषः । सजातोअत्यरिच्यत । पश्चाद्भूमिमथोपुरः १६ यत्पुरुषेणहविषादेवायज्ञमतन्व

तावसंतोअस्यासीदाज्यं। ग्रीष्मइध्मःशरद्धविः। सप्तास्यासन्परिधयः। त्रिःसप्त
समिधःकृताः। देवायद्यज्ञंतन्वानाः। अबध्नन्पुरुषंपशुं। तंयज्ञंबर्हिषिप्रौक्षन्। पु-
रुषंजातमग्रतः १७ तेनदेवाअयजंत। साध्याऋषयश्चये। तस्माद्यज्ञात्सर्वहुतः।
संभृतंपृषदाज्यं। पशूंस्ताँश्चक्रेवायव्यान्। आरण्यान्ग्राम्याश्चये। तस्माद्य-
ज्ञात्सर्वहुतः। ऋचःसामानिजज्ञिरे। छंदाँसिजज्ञिरेतस्मात्। यजुस्तस्मादजा
यत १८ तस्मादश्वाअजायंत। येकेचोभयादतः। गावोहजज्ञिरेतस्मात्। तस्मा
ज्जाताअजावयः। यत्पुरुषंव्यदधुः। कतिधाव्यकल्पयन्। मुखंकिमस्यकौबाहू।
कावूरूपादावुच्येते। ब्राम्हणोस्यमुखमासीत्बाहूराजन्यःकृतः १९ उरूतदस्य
यद्वैश्यः। पद्भ्यांशूद्रोअजायत। चंद्रमामनसोजातः। चक्षोःसूर्योअजायत। मुखा
दिंद्रश्चाग्निश्च। प्राणाद्वायुरजायत। नाभ्याआसीदंतरिक्षं। शीर्ष्णोद्यौःसमवर्तत
। पद्भ्यांभूमिर्दिशःश्रोत्रात्। तथालोकाँअकल्पयन् २० वेदाहमेतंपुरुषंमहांतं।

आदित्यवर्णंतमसस्तुपारे। सर्वाणिरूपाणिविचित्यधीरः। नामानिकृत्वाभिवद न्यदास्ते। धातापुरस्ताद्यमुदाजहार। शक्रःप्रविद्वान्प्रदिशश्चतस्रः। तमेवंवि द्वानमृतइहभवति। नान्यःपंथाअयनायविद्यते। यज्ञेनयज्ञमयजंतदेवाःतानिध र्माणिप्रथमान्यासन्। तेहनाकंमहिमानःसचंते। यत्रपूर्वेसाध्याःसंतिदेवाः २१ पुरुषःपुरोग्रतोजायतकृतोकल्पयन्नासंद्वेच १३ अद्भ्यःसंभूतःपृथिव्यैरसाच्च। विश्वकर्मणःसमवर्तताधि। तस्यत्वष्टाविदधद्रूपमेति। तत्पुरुषस्यविश्वमाजान मग्रे। वेदाहमेतंपुरुषंमहांतं। आदित्यवर्णंतमसःपरस्तात्। तमेवंविद्वानमृतइह भवति। नान्यःपंथाअयनायविद्यते। प्रजापतिश्चरतिगर्भेअंतः। अजायमानोबहु धाविजायते २२ तस्यधीराःपरिजानंतियोनिं। मरीचीनांपदमिच्छंतिवेधसः। योदेवेभ्यआतपति। योदेवानांपुरोहितः। पूर्वोयोदेवेभ्योजातः। नमोरुचायब्रा- ह्मये। रुचंब्राह्मंजनयंतः। देवाअग्रेतदब्रुवन्। यस्त्वैवंब्राम्हणोविद्यात्। तस्यदे

वाअसन्वशी। ह्रीश्चंतेलक्ष्मीश्चपत्न्यौ। अहोरात्रेपार्श्वे। नक्षत्राणिरूपं। अश्वि-
नौव्यात्तंइष्टंमंनीषाणा। अमुंमंनीषाणा। सर्वंमनीषाणा १ जायतेवशीसप्तचा २३
भर्तासन्भ्रियमाणोबिभर्ति। एकोदेवोबहुधानिविष्टः। यदाभारंतंद्रयंतेसभर्तुं।
निधायंभारंपुनरस्तमेति। तमेवमृत्युममृतंतमाहुः। तंभर्तारंतमुगोप्तारमाहुः। स
भृतोभ्रियमाणोबिभर्ति। यएनंवेदसत्येनभर्तुं। सद्योजातमुतजंहात्येषः। उतोज
रंतंनजहात्येकं २४ उतोबहूनेकमहर्जहारा। अतंद्रोदेवःसदमेवप्राथै। यस्तद्वेद्य
तंआबभूवं। संधांचयाश्संदधेब्रह्मणैषःरमतेतंस्मिन्नुतजीर्णेशयाने। नंनंजहा
त्यहंसुपूर्व्येषु। त्वामापोअनुसर्वाश्चरंतिजानतीः। वत्संपयसापुनानाःत्वमग्निंह
व्यवाहश्समिंत्से। त्वंभर्तामातरिश्वांप्रजानां २५ त्वंयज्ञस्त्वमुवेवासिसोमः। त-
वदेवाहवमायंतिसवें। त्वमेकोसिबहूननुप्रविष्टः। नमस्तेअस्तुसुहवोमएधि। न-
मोवामस्तुश्रुणुतश्हवंमे। प्राणापानावजिरश्संचरंतौ। व्हयामिवांब्रह्मणातूर्तमे

तै। योमांद्वेष्टितंजंहितंयुवाना। प्राणांपानौसंविदानौजंहितं। अमुष्यासुनापासं-
गंसाथां २६ तंमेंदेवाब्रह्मणासंविदानौ। वधायंदत्तंतमहश्हंनामि। असज्जजान
सतआबभूव। यंयंजजानसउंगोपोअस्य। यदाभारंतंद्रयंतेसभर्तुं। परास्वंभारंपु
नरस्तंमेति। तद्वैतंप्राणोअभवः। महान्भोगःप्रजापतेः। भुजःकरिष्यमाणःयद्दे-
वान्प्राणंयोनवा २७एकंप्रजानांगसाथांनवा १५ हरिश्हरंतमनुयंतिदेवाःवि-
श्वस्येशानंवृषभंमतीनां। ब्रम्हसरूपमनुमेदमागात्। अयंनंमाविदधीर्विक्रमस्व।
माछिंदोमृत्योमावधीः। मामेबलंविव्हहोमाप्रमोषी। प्रजांमामेरीरिषअयुरुग्र। नृ
चक्षंसंत्वाहविषाविधेम। सद्यश्चंकमानायं। प्रवेपानायंमृत्यवे २८ प्रास्माआशा
अश्रृण्वन्। कामेनाजयन्पुनः। कामेनमेकामआगात्। हृदंयात्धृदंयंमृत्योः। य
दमीषामदःप्रियं। तदैतूपमामाभिः। परंमृत्योअनुपरेहिपंथां। यस्तेश्वइतरोदेव
यानांत्। चक्षुष्मतेश्रृण्वतेतेब्रबीमि। मानःप्रजा श्रीरिषोमोतवीरान्। प्रपूर्व्यं

मनसावंदमानः। नाधमानोवृषभंचर्षणीनां। यःप्रजानामेकराण्मानुषीणां। मृत्युं यंजेप्रथमजामृतस्यं २९ मृत्यवेवीराश्चत्वारिच १६ तरणिर्विश्वदर्शतोज्योति ष्कृदसिसूर्य। विश्वमाभासिरोचनं। उपयामगृहीतोसिसूर्यायत्वा। भ्राजस्वते एषतेयोनिः। सूर्यायत्वाभ्राजस्वते १७ आप्यायस्वमदिंतमसोमविश्वाभिरूति भिः। भवानःसप्रथस्तमः १८ इयुष्टेयेपूर्वतरामपश्यन्व्युच्छंतीमुषसंमर्त्यासः। अस्माभिरूनुप्रतिचक्ष्याभूदोतोयंतियेअपरीषुपश्यान् १९ ज्योतिष्मतींत्वासाद यामिज्योतिःष्कृतंत्वासादयामिज्योतिर्विदंत्वासादयामिभास्वतींत्वासादयामि ज्वलंतींत्वासादयामिमल्मलाभवंतींत्वासादयामिदीप्यमानांत्वासादयामिरो- चमानांत्वासादयाम्यजस्रांत्वासादयामिबृहज्ज्योतिषंत्वासादयामिबोधयंतींत्वा सादयामिजाग्रतींत्वासादयामि २० प्रयासायस्वाहा। यासायस्वाहा। वियासाय स्वाहा। संयासायस्वाहोद्यासायस्वाहा। वयासायस्वाहा। शुचेस्वाहा। शोकाय

स्वाहा। तप्यस्त्वैस्वाहातपतेस्वाहा। ब्रह्महत्यायैस्वाहासर्वस्मैस्वाहा २१ चि-
त्तꣳसंतानेनभवंयुवंन्नारुद्रंतेनिम्नापशूपतिꣳस्छूलहृदयेनाग्निꣳहृदयेनरुद्रंलोहिं
तेनशर्वंमतस्नाभ्यामहादेवमंतःपार्श्वेनोषिष्टहꣳ शिंगिनिकोशाभ्यां २२ ज्योतिं
ष्मतींप्रयासायंचित्तमेकं। चितिःपृथिव्यग्निः। सूर्यंतेचक्षुर्महाहंविर्होतावघ्घोता
। ब्राम्हणएकंहोताग्निर्यजुंभिः। सेनेंद्रस्यदेवस्यं। सुवर्णंघर्मꣳसहस्त्रंशीर्षाद्योभ
र्ताहंतरणिराप्यांयस्वेयुष्टेयेज्योतिंष्मतीं। प्रयासायंचित्तमेकंवि ꣳशतिः। चितिं
रग्निर्यजुंभिरंतःप्रविंष्टः। प्रजापतिर्भर्ताप्रजयासंविदानस्तस्यधीराज्योतिंष्मतीं
त्रिपंचाशत् २३ तछंयोरावृणीमहे। गातुंयज्ञायं। गातुंयज्ञपंतये। दैवींस्वस्तिर-
स्तुनः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वंजिंगातुभेषजं। शंनोअस्तुद्विपदे। शंचतुष्पदे
ॐ शांतिः शांतिः शांतिः। इतिउपनिषदादिचित्तिप्रथमसिद्धांतः। ७।
अथसहवैकाठप्रारंभः। । श्रीगणेशायनमः। । हरिः ॐम्। नमोब्रह्मणेनमोअ-

स्त्वग्नयेनमः पृथिव्यैनमओषधीभ्यः । नमोवाचेनमोवाचस्पतयेनमोविष्णवेबृ-
हतेकरोमि । ॐशांतिःशांतिःशांतिः । ॐ सहवैदेवानांचासुराणांचयज्ञौप्रततावा
स्तांवयꣳस्वर्गंलोकमेष्यामोवयमेष्यामइतितेसुराःसन्नह्यसहसैवाचरन्ब्रम्हच-
र्येणतपसैवदेवास्तेसुराअमुह्यꣳस्तेनप्रजानꣳस्तेपराभवन्तेनस्वर्गंल्लोकमायन्
प्रसृतेनवैयज्ञेनदेवाःस्वर्गंल्लोकमायन्नप्रसृतेनासुरान्पराभावयन्प्रसृतोहवैयं-
ज्ञोपवीतिनोयज्ञोप्रसृतोनुपवीतिनोयत्किंचब्राम्हणोयंज्ञोपवीत्यधीतेयजंतएव-
तत्तस्मायज्ञोपवीत्यैवाधीयीतयाजयेद्यजेतवायज्ञस्यप्रसृत्याअजिनंवासोवाद-
क्षिणतउपवीयदक्षिणंबाहुमुद्धरतेवधत्तेसव्यमितियज्ञोपवीतमेतदेवविपरीतं-
प्राचीनावीतꣳसंवीतंमानुषं १ रक्षांꣳसिहवापुरोनुवाकेतपोग्रमातिष्ठंततान्प्रज्ञा
पतिर्वरेणोपामंत्रयततानिवरमवृणीतादित्योनोयोद्धाइतितान्प्रजापतिरब्रवी-
द्योधंयध्वमितितस्मादुत्तिष्ठंतꣳहवातानिरक्षांꣳस्यादित्यंयोधयंतियावदस्तम

न्वंगात्तानिह्नवाएतानिरक्षा * सिगायत्रियाभिमंत्रितेनांभसाशांम्यंतितदुह्नवाए
तेब्रह्मवादिनःपूर्वाभिमुखाःसंध्यायांगायत्रियाभिमंत्रिताआपऊर्ध्वंविक्षिपंतित ।
एताआपोवज्रीभूत्वातानिरक्षा * सिमंदेहारुणेद्वीपेप्रक्षिपंतियत्प्रदक्षिणंप्रक्रमं-
तितेनंपाप्मानमवधून्वंत्युद्यंतमस्तंयंतमादित्यमभिध्यायन्कुर्वन्ब्राम्हणोविद्वा-
न्त्सकलंभद्रमश्नुतेसावादित्योब्रह्मेतिब्रम्हैवसन्ब्रम्हाप्येतियएवंवेद २ यद्देवादे
वहेळनंदेवासश्चकृमावयं । आदित्यास्तस्मान्मामुंचतर्त्तस्यर्त्तेनमामित । देवा
जीवनकाम्यायद्वाचान्टतमूदिम । तस्मान्नइहमुंचतविश्वेदेवाःसजोषसः । ऋ-
तेनद्यावापृथिवीऋतेनत्व * संरस्वति । कृतान्नःपाह्येनसोयत्किंचान्टतमूदिम ।
इंद्राग्नीमित्रावरुणौसोमोधाताबृहस्पतिः । तेनोमुंचंत्वेनसोयदन्यकृतमारिम
सजातशंस्सादुतजामिशंस्साज्ज्यायसःशंस्सादुतवाकनीयसः ।अनाधृष्टंदेवकृ
तंयदेनस्तस्मात्वमस्मांज्जातवेदोमुमुग्धि ।यद्वाचायन्मनसाबाहुभ्यामूरुभ्याम

स० का.
१०

ष्ठीवभ्यांशिश्नैर्यदनृतंचकृमावयंअग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतुचकृम
यानिदुष्कृता येनंत्रितोअर्णवान्निर्बभूवयेनसूर्यंतमसोनिर्मुमोचं येनेंद्रोविश्वाअ-
जंहादरातीस्तेनाहंज्योतिषाज्योतिरानशानआंक्षि। यत्कुसीदमप्रतीत्तंमयेहये
नंयमस्यंनिधिनाचरामि। एतत्तदग्ने अनृणोभवामिजीवन्नेवप्रतितत्तेदधामि। य
न्मयिमातायदापिपेषयदंतरिक्षंयदाशसातिक्रामामित्रितेदेवादिविजातायदाप
इमंमेवरुणतत्वायामित्वन्नो अग्नेसत्वन्नोअग्नेत्वमग्नेअयासि ३ यददीव्यंनृणमहं
बभूवादित्सन्वासंजगरजनेभ्यः। अग्निर्मातस्मादिंद्रश्चसंविदानौप्रमुंचतां। यद्ध
स्ताभ्यांचकरकिल्बिषाण्यक्षाणांवग्नुमुपजिघ्नमानःउग्रंपश्याचंराष्ट्रभृच्चतान्यप्स
रसावनुदत्तामृणानि। उग्रंपश्येराष्ट्रभृत्किल्बिषाणियदक्षवृत्तमनुदत्तमेतत्। नेन्नं
ऋणानृणवइत्संमानोयमस्यलोकेअधिरज्जुरायं। अवंतेहेळउदुत्तमामिमंमेवरुण
तत्वायामित्वन्नोअग्नेसत्वन्नोअग्ने। संकुसुकोविकुसुकोनिर्ऋथोयश्चनिस्वनः। ते १ ये

१०

स्मद्यक्ष्ममनागसोदूराहूरमचीचतं। निर्यक्ष्ममचीचतेकृत्यांनिर्ऋतिंच। तेनयो १
स्मत्समृच्छातैतमस्मैप्रसुवामसि। दुःशश्सानुशश्साभ्यांघणेनानुघणेनच। तेना
न्यो स्मत्समृच्छातैतमस्मैप्रसुवामसि। संवर्चसापयसासंतनूभिरगन्महिमनसा
सश्शिवेन। त्वष्टानोअत्रविदधातुरायोनुमार्ष्टुतन्वो यद्विलिष्टं ४ आयुष्टेविश्वतो
दधदयमग्निर्वरेण्यः। पुनस्तेप्राणआयातिपरायक्ष्मश्सुवामिते। आयुर्दाअग्नेहवि
षोजुषाणोघृतप्रतीकोघृतयोनिरेधि। घृतंपीत्वामधुचारुगव्यंपितेवपुत्रमभिरक्ष
तादिमंइममग्नआयुषेवर्चसेकृधितिग्ममोजोवरुणसश्शिशाधि। मातेवास्माअ-
दितेशर्मयच्छविश्वेदेवाजरदष्टिर्यथासत्। अग्नआयूश्षिपवसआसुवोर्जमिषंचनः
। आरेबाधस्वदुच्छुनां। अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं। दधद्रयिंमयिपोषं। अ
ग्निर्ऋषिःपवमानःपाञ्चजन्यःपुरोहितः। तमीमहेमहागयं। अग्नेजातान्प्रणुदानः
सपत्नान्प्रत्यजातान्जातवेदोनुदस्व। अस्मेदीदिहिसुमनाअहेळंछर्मंतेस्यामात्रि

स० ११ | का.

वरूथउद्भौ । सहसाजातान्प्रणुदानःसपत्नान्प्रत्यजातान्जातवेदोनुदस्व । अधि
नोब्रूहिसुमनस्यमानोवयꣳस्यामप्रणुदानःसपत्नान् । अग्नेयोनोभितोजनोवृको-
वारेजिघांꣳसति । ताꣳस्त्वंवृत्रहंजहिवस्वस्वभ्यमाभर । अग्नेयोनोभिदासति
समानोयश्चानिष्ट्यः । तंवयꣳसमिधंकृत्वातुभ्यमग्नेपिदध्मसि । योनःशपादशपतो
यश्चनःशपतःशपात् । उषाश्चतस्मैनिम्रुक्चसर्वंपापꣳसमूहतां । योनःसपत्नोयोर-
णोमर्तोभिदासतिदेवाः । इध्मस्येवप्रक्षायतोमातस्योच्छेषिकिंचन । योमांद्वेष्टिजा
तवेदोयंचाहंद्वेष्मियश्चमां । सर्वाꣳस्तानग्नेसंदहयाꣳश्चाहंद्वेष्मियेचमां । योअस्म
भ्यमरातीयाद्यश्चनोद्वेषतेजनः । निंदाद्योअस्मांदिप्साच्चसर्वाꣳस्तान्मꣳष्मषाकुरु
सꣳशितंमेब्रम्हसꣳशितंवीर्यां३ बलं । सꣳशितंक्षत्रंमेजिष्णुयस्याहमस्मिपुरोहि
तः । उदेषांबाहूअतिरमुद्वर्चोअथोबलं । क्षिणोमिब्रह्मणामित्रानुन्नयामिस्वां३ अहं
। पुनर्मनःपुनरायुर्मआगात्पुनःश्चक्षुःपुनःश्रोत्रंमआगात्पुनःप्राणःपुनराकूतंमआ

११

गात्पुनं श्रितंपुनराधीतंम आगात्। वैश्वानरोमेदब्धस्तनूपाअवबाधतांदुरितानि
विश्वा ५ वैश्वानरायप्रतिवेदयामोयदीनृण संगरोदेवतासु। सएतान्पाशान्प्रमु
चन्प्रवेदसनोमुंचातुदुरितादवद्यात्। वैश्वानरःपवयान्नःपवित्रैर्यत्संगरमभिधा-
वाम्याशां। अनाजानन्मनसायाचमानोयदत्रैनो अवतत्सुवामि। अमीयेसुभगेदि
विविचृतौनामतारके। प्रेहामृतस्यच्छतामेतद्बद्धकमोचनं। विजिहीर्ष्वलोकान्कृधि
बंधान्मुंचासिबद्धकं। योनेरिवप्रच्युतोगर्भःसर्वान्पथो अनुष्व। सप्रजानन्प्रतिगृ-
ह्णीताविद्वान्प्रजापतिःप्रथमजाऋतस्य। अस्माभिर्दत्तंजरसःपरस्तादछिन्नंतंतु
मनुसंचरेम। ततंतंतुमन्वेकेअनुसंचरंतियेषांदत्तंपित्र्यमायनवत्। अबंध्वेकेददतः
प्रयच्छाद्दातुंचेच्छक्नवाःसःस्वर्गएषां। आरभेथामनुसंरभेथांसमानंपंथामवथो
घृतेन। यद्वांपूर्त्तंपरिविष्टंयदग्नौतस्मैगोत्रायेहजायापतीसंरभेथां। यदंतरिक्षंपृ
थिवीमुतद्यांयन्मातरंपितरंवाजिहिंसिम। अग्निर्मातस्मादेनसोगार्हपत्यउन्नोने

षड्ढुरितायानिचकृम। भूमिर्माता दितिर्नोजनित्रं भ्रातांतरिक्षमभिशस्तएनः द्यौर्नः पितापितृयाच्छंभवासिजामिमित्वामाविविवित्सिलोकात्। यत्रसुहार्दः सुकृतोमदंते विहायरोगंतन्वा १ * स्वायाः अश्लोणागैरह्रुताः स्वर्गेतत्रपश्येमपितरंचपुत्रं। यदन्नमद्म्यनृतेनदेवादास्यन्नदास्यन्नुतवाकरिष्यन्। यद्देवानांचक्षुष्यागोअस्तियदेव किंचप्रतिजग्राहमग्निर्मातस्मादनृणंकृणोतु। यदन्नमद्मिबहुधाविरूपंवासोहिरण्यं मुतगामजामविं। यद्देवानांचक्षुष्यागोअस्तियदेवकिंचप्रतिजग्राहमग्निर्मातस्मा दनृणंकृणोतु। यन्मयामनसावाचाकृतमेनः कदाचन। सर्वस्मात्तस्मान्मेळितोमो ग्धित्वं * हिवेत्थयथातथं ८ वातरशनाह्वाऋषयः श्रमणाऊर्ध्वमंथिनोबभूवुस्ता नृषयोर्थमायं * स्तेनिलायमचरं * स्तेनुप्रविशुः कुश्मांडानिताँ * स्तेष्वन्वविंदन्छ्र द्धयाचतपसाचतानृषयोब्रुवन्कथानिलायंचरथेतितऋषीनब्रूवन्नमोवोस्तुभगवं तोस्मिंधाम्निकेनवः सपर्यामेतिनानृषयोब्रुवन्पवित्रंनोब्रूतयेनारेपसःस्यामेतित-

एतानिसूक्तान्यपश्यन्यद्देवादेवहेळनंयद्दीव्यंनृणमहंबभूवायुष्टेविश्वतोदधदि-
त्येतैराज्यंजुहुतवैश्वानरायप्रतिवेदयामइत्युपातिष्ठतयदर्वाचीनमेनोभ्रूणहत्या-
यास्तस्मान्मोक्ष्यध्वइतितएतैरजुहवुस्तेरेपसोभवन्कर्मादिष्वेतैर्जुहुयात्पूतोदेव
लोकान्त्समश्नुते ७ कूश्मांडैर्जुहुयाद्योपूतइवमन्येतयथास्तेनोयथाभ्रूणहैवमेष-
भवतियोयोनौरेतःसिंचतियदर्वाचीनमेनोभ्रूणहत्यायास्तस्मान्मुच्यतेयावदेनो
दीक्षामुपैतिदीक्षितएतैःसंततिंजुहोतिसंवत्सरंदीक्षितोभवतिसंवत्सरादेवात्मा
नंपुनीतेमासंदीक्षितोभवतियोमासः ससंवत्सरःसंवत्सरादेवात्मानंपुनीतेचतु
र्विꣳशतिꣳरात्रीर्दीक्षितोभवतिचतुर्विꣳशतिरर्धमासाः संवत्सरःसंवत्सरादेवा
त्मानंपुनीतेद्वादशरात्रीर्दीक्षितोभवतिद्वादशमासाःसंवत्सरःसंवत्सरादेवात्मा-
नंपुनीतेषड्रात्रीर्दीक्षितोभवतिषड्वाऋतवःसंवत्सरःसंवत्सरादेवात्मानंपुनीतेति
स्रोरात्रीर्दीक्षितोभवतित्रिपदागायत्रीगायत्रियाएवात्मानंपुनीतेनमाꣳसमश्नी

यान्नास्त्रियमुपेयान्नोपर्यांसीतजुगुप्सेतानृतात्पयोब्राम्हणस्यव्रतंयवागूराजन्य--
स्यामिक्षावैश्यस्याथोसौम्येप्यध्वरएतद्व्रतंब्रूयाद्यदिमन्येतोपदास्यामीत्योदनं
धानाःसक्तून्घृतमित्यनुव्रतयेदात्मनोनुपदासाय ८ अजान्हवैपृश्नीꣳस्तपस्यमा
नान्ब्रह्मस्वयंभ्वभ्यानर्षत्तऋषयोभवन्तदृषीणामृषित्वंतांदेवतामुपातिष्ठंतयज्ञ-
कामास्तएतंब्रह्मयज्ञमपश्यन्तमाहरंस्तेनायजंतयदृचोध्यगीषततताःपयआहुत--
योदेवानामभवन्यद्यजूꣳषिघृताहुतयोयत्सामानिसोमाहुतयोयदथर्वांगिरसोम
ध्वाहुतयोयद्ब्राम्हणानीतिहासान्पुराणानिकल्पान्गाथानाराशꣳसीर्मेदाहुतयोदे
वानामभवन्ताभिःक्षुधंपाप्मानमपाघ्नन्नपहतपाप्मानोदेवाःस्वर्गंलोकमाय--
न्ब्रह्मणःसायुज्यमृषयोगच्छन् ९ पंचवाएतेमहायज्ञाःसंततिप्रतायंतेसततिसंति
ष्ठंतेदेवयज्ञःपितृयज्ञोभूतयज्ञोमनुष्ययज्ञोब्रह्मयज्ञइतियदग्नौजुहोत्यपिसमिधं
तद्देवयज्ञःसंतिष्ठतेयत्पितृभ्यःस्वधाकरोत्यप्यपस्तत्पितृयज्ञःसंतिष्ठतेयद्भूते—

भ्योबलिꣳहरंतितद्भूतयज्ञः संतिष्ठतेयद्ब्राम्हणेभ्योन्नंददातितन्मनुष्ययज्ञः संतिष्ठ
तेयत्स्वाध्यायमधीयीतैकामप्यृचंयजुः सामवातद्ब्रह्मयज्ञः संतिष्ठतेयद्दृचौधीतेप-
यसः कुल्याअस्यपितृन्त्स्वधाअभिवहंतियद्यजूꣳषिघृतस्यकुल्यायत्सामानिसो-
मएभ्यः पवतेयदथर्वांगिरसोमधोः कुल्यायद्ब्राम्हणानीतिहासान्पुराणानिकल्पा
न्गाथानाराशꣳसीर्मेदसकुल्याअस्यापितृन्त्स्वधाअभिवहंतियदृचोधीतेपयआ-
हुतिभिरेवतद्देवाꣳस्तर्पयतियद्यजुꣳषिघृताहुतिभिर्यत्सामानिसोमाहुतिभिर्यद-
थर्वांगिरसोमध्वाहुतिभिर्यद्ब्राम्हणानीतिहासान्पुराणानिकल्पान्गाथानाराशꣳ
सीर्मेदाहुतिभिरेवतद्देवाꣳस्तर्पयतितएनंतृप्ताआयुषातेजसावर्चसाश्रियायशा-
साब्रह्मवर्चसेनान्नाद्येनचतर्पयंति १० ब्रम्हयज्ञेनयक्ष्यमाणः प्राच्यांदिशिग्रामा
दच्छदिर्दर्शउदीच्यांप्रागुदीच्यांवोदितआदित्येदक्षिणतउपवीयोपविश्यहस्तांव
वानिज्यत्रिराचामेद्विःपरिमृज्यसकृदुपस्पृश्यशिरश्चक्षुषीनासिकेश्रोत्रेहृदयमाल

म० १४ | भ्ययत्त्रिराचामंतितेनऋचंःप्रीणातियद्विःपरिमृजंतितेनयजुꣳषियत्सकृदुपस्पृ- | का.
शंतितेनसामांनियत्सव्यंपाणिंपादौप्रोक्षतियच्छिरश्चक्षुंषीनासिंकेश्रोत्रेहृदयमा
लभंतेतेनाथर्वांगिरसौब्राम्हणानीतिहासान्पुराणानिकल्पान्गाथांनाराशꣳसी-
प्रीणातिदर्भाणांमहदुपस्तीर्योपस्थंकृत्वाप्राङासीनःस्वाध्यायमधीयीतापांवाए-
षओषधीनाꣳरसोयद्दर्भाःसरसमेवब्रह्मंकुरुतेदक्षिणोत्तरौपाणीपादौकृत्वासपवि
त्रावोमितिप्रतिपद्यतएतद्वैयजुस्त्रयींविद्यांप्रत्येषावागेतत्परममक्षरंतदेतदृचाभ्यु
क्तमृचोअक्षरेपरमेव्योमन्यस्मिन्देवाअधिविश्वेनिषेदुर्यस्तन्नवेदकिमृचाकरिष्य-
तियइत्तद्विदुस्तइमेसमासतइतित्रीनेवप्रायुंक्तभूर्भुवःस्वरित्याहैतद्वैवाचःसत्यंय
देववाचःसत्यंतत्प्रायुंक्ताथसावित्रींगायत्रींत्रिरन्वाहपच्छोर्धर्चशोनवाꣳसविता
श्रियःप्रसविताश्रियमेवाप्नोत्यथोप्रज्ञातयैवप्रतिपदाछंदाꣳसिप्रतिपद्यते॥१॥ग्रा | १४
मेमनसास्वाध्यायमधीयीतदिवानक्तंवेतिहस्माहशौचआन्हेयउतारण्येबलउता

वाचोततिष्ठंन्नुतव्रजंन्नुतासीनउतशयानोधीयीतैवस्वाध्यायंतपस्वीपुण्योभवति
यएवंविद्वान्स्वाध्यायमधीतेनमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधी
भ्यः।नमोवाचेनमोवाचस्पतयेनमोविष्णवेबृहतेकरोमि १२ मध्यंदिनेप्रबल---
मधीयीतासौखलुवावैषआदित्योयद्ब्राह्मणस्तस्मात्तर्हितेक्ष्णिष्ठंतपतितदेषा--
भ्युक्ता।चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः।आप्राद्यावापृथिवीअं
तरिक्षꣳसूर्यआत्माजगतस्तस्थुषश्चेतिसवाएषयज्ञःसद्यःप्रतायतेसंद्यसंतिष्ठते
तस्यप्राक्सायमवभृथोनमोब्रह्मणइतिपरिधानीयांत्रिरन्वाहापउपस्पृश्यगृहाने
तिततोयत्किंचददातिसादक्षिणा १३ तस्यवाएतस्ययज्ञस्यमेघोहविर्धानंवि-
द्युदग्निर्वर्षꣳहविस्तनयित्नुर्वषट्कारोयदवस्फूर्जतिसोनुवषट्कारोवायुरात्मामावा-
स्याःस्विष्टकृद्यएवंविद्वान्मेघेवर्षतिविद्योतमानेस्तनयत्यवस्फूर्जतिपवमानेवा-
यावमावास्यायाꣳस्वाध्यायमधीतेतपएवतत्तप्यतेतपोहिस्वाध्यायइत्युत्तमनाक

*रोहत्युत्तमः समानानां भवति यावंत *ह वा इमां वित्तस्य पूर्णां दद॑त्स्वर्गं लोकं जयति तावंतं लोकं जयति भूया *सं चाक्षय्यं चापपुनर्मृत्युं जयति ब्रह्मणः सायुज्यं गच्छति १४ तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माशुचिर्यद्देशः समृद्धिर्देवतानि य एवं विद्वान्महारात्र उषस्युदिते व्रज*स्तिष्ठन्नासीनः शयानोरण्ये ग्रामे वा यावत्तरस*स्वाध्यायमधीते सर्वाँल्लोकाञ्जयति सर्वान्लोकाननृणोनुसंचरतीति तदेषाभ्युक्ता। अनृणा अस्मिन्ननृणाः परस्मि*स्तृतीये लोके अनृणास्याम। ये देवयाना उत पितृयाणाः सर्वान्पथो अनृणा आक्षीयमेत्यग्निर्वै जातं पाप्मा जग्राह तं देवा आहुतीभिः पाप्मानमपाघ्नन्नाहुतीनां यज्ञेन यज्ञस्य दक्षिणाभिर्दक्षिणानां ब्राम्हणेन ब्राम्हणस्य छंदोभिः*छंदसा*स्वाध्यायेनापहतपाप्मा स्वाध्यायो देवपवित्रं वा एतत्तं योनूत्सृजत्यभागो वाचि भवत्यभागो नाके तदेषाभ्युक्ता। यस्तित्याज सखिविद*सखायं न तस्य वाच्यपि भागो अस्ति। यदी*शृणोत्यलक*शृणोति न हि प्रवेद सुकृतस्य पंथा

मितितस्मात्स्वाध्यायोध्येतव्योयंयंक्रतुमधीतेतेनतेनास्येष्टंभवत्यग्नेर्वायोरादि--
त्यस्यसायुज्यंगच्छतितदेषाभ्युक्ता। येअर्वाङुतवापुराणेवेदंविद्वा॑ंसमभितो-
वदंत्यादित्यमेवतेपरिवदंतिसर्वेअग्निंद्वितीयंतृतीयंचहंस॑समितियावतीर्वैदेव-
तास्ताः सर्वावेदविदिब्राम्हणेवसंतितस्माद्ब्राम्हणेभ्योवेदविद्भ्योदिवेदिवेनमं--
स्कुर्यान्नाश्लीलंकीर्तयेदेताएवदेवताःप्रीणाति १५ रिच्यंतइववाएषप्रेवरिच्य-
तेयोयाजयतिप्रतिवागृण्हातियाजयित्वाप्रतिगृह्यवानश्नंत्रिःस्वाध्यायंवेदमधी
यीतत्रिरात्रंवासावित्रींगायत्रीमन्वातिरेचयतिवरोदक्षिणावरेणैववर॑स्पृणो--
त्यात्माहिवरः १६ दुहेहवाएषछंदा॑ंसियोयाजयतिसयेनंयज्ञक्रतुनायाजयेत्सो
रण्यंपरेत्यशुचौदेशेस्वाध्यायमेवैनमधीयन्नासीततस्यानशनंदीक्षास्थानमुपस
दआसन॑सुत्यावाग्जुहूर्मनउपभृद्धृतिर्ध्रुवाप्राणोहविः सामाध्वर्युःसवाएषयज्ञः
प्राणदक्षिणोनंतदक्षिणःसमृद्धतरः १७ कतिधावकीर्णिप्रविशतिचतुर्धेत्याहुर्ब्र

ह्मवादिनोमरुतःप्राणैरिंद्रंबलेनबृहस्पतिंब्रह्मवर्चसेनाग्निमेवेतरेणसर्वेणतस्यै--
तांप्रायश्चित्तिंविदांचकारसुदेवः काश्यपोयोब्रह्मचार्यवकिरेदमावास्यांयाश्रा--
त्र्यामग्निंप्रणीयोपसमाधायद्विराज्यस्योपघातंजुहोतिकामावकीर्णोस्म्यवकीर्णो
स्मिकामकामायस्वाहाकामाभिद्रुग्धोस्म्यभिद्रुग्धोस्मिकामकामायस्वाहेत्यमृ-
तंवाआज्यममृतमेवात्मंधत्तेहुत्वाप्रयतांजलिःकवातिर्यङ्ङग्निमभिमंत्रयेतसंमा
सिंचतुमरुतःसमिंद्रसंबृहस्पतिःसंमायमग्निःसिंचत्वायुषाचबलेनचायुष्मंतंकरो
तमेतिप्रतिहास्मैमरुतः प्राणांदधतिप्रतींद्रोबलंप्रतिबृहस्पतिर्ब्रह्मवर्चसंप्रत्य--
ग्निरितरत्सर्वंसर्वतनुर्भूत्वासर्वमायुरेतित्रिरभिमंत्रयेतत्रिषत्याहिदेवायोपूतइ
वमन्येतसइत्थंजुहुयादित्थमभिमंत्रयेतपुनीतएवात्मानमायुरेवात्मंधत्तेवरोदाक्षि
णावरेणैवरंस्पृणोत्यात्माहिवरः १८ भूःप्रपद्येभुवः प्रपद्येस्वः प्रपद्येभूर्भुवस्वः
प्रपद्येब्रह्मप्रपद्येब्रह्मकोशंप्रपद्येमृतंप्रपद्येमृतकोशंप्रपद्येचतुर्जालंब्रह्मकोशंयं-

मृत्युर्नावपश्यंतितंप्रपद्येदेवान्प्रपद्येदेवपुरंप्रपद्येपरीवृत्तोवरीवृतोब्रह्मणावर्मणा
हृतेजसाकश्यपस्ययस्मैनमस्तस्छिरोधर्मोमूर्धानंब्रम्होत्तराहनुर्यज्ञोधराविष्णुर्हृ
दंयश्संवत्सरःप्रजननमश्विनौपूर्वपादावत्रिर्मध्यंमित्रावरुणावपरपादावग्निःपुच्छ
स्यप्रथमंकांडंततइंद्रस्ततःप्रजापतिरभयंचतुर्थश्सवाएषदिव्यःशाक्करःशिशु-
मारः स्तश्हयएवंवेदापपुनर्मृत्युंजयतिजयतिस्वर्गंलोकंनाध्वनिप्रमीयतेनाग्नौ-
प्रमीयतेनाप्सुप्रमीयतेनानपत्यःप्रमीयतेलघ्वान्नोभवतिध्रुवस्त्वमसिध्रुवस्य--
क्षितमसित्वंभूतानामधिपतिरसित्वंभूतानाश्श्रेष्ठोसित्वांभूतान्युपपर्यावर्तंतेनम
स्तेनमःसर्वंतेनमोनमःशिशुकुमारायनमः १९ नमःप्राच्यैदिशेयाश्चदेवताएत
स्यांप्रतिवसंत्येताभ्यश्चनमोनमोदक्षिणायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्ये
ताभ्यश्चनमोनमःप्रतीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनम
उदीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमऊर्ध्वायैदिशेयाश्च

देवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोधरायैदिशेयाश्चदेवताएतस्यांप्रति
वसंत्येताभ्यश्चनमोनमौवांतरायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चन
मोनमोगंगायमुनयोर्मध्येयेवसंतितेमेप्रसन्नात्मानश्चिरंजीवितंवर्द्धयंतिनमोगं-
गायमुनयोर्मुनिभ्यश्चनमोनमोगंगायमुनयोर्मुनिभ्यश्चनमः । सहरक्षां * सियद्दे-
वाःसप्तदंशयददींव्यंपंचंदशायुंष्टेचतुंर्वि * शद्वैश्वानरायषड़ि * शतिर्वातरशना
हकुश्मांडैरजान्हपंचंब्रह्मयज्ञेनग्रामैमध्यांदिनेतस्यवैमेघस्तस्यवैद्यौरिच्यंतेदुहेहं
कतिधावकीर्णीभूनमःप्राच्यैयि * शतिःसहब्रम्हयज्ञेनवि * शतिः २० नमोब्रम्हं
णेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः । नमौवाचेनमौवाचस्पतयेनमोवि
ष्णंवेबृहतेकरोमि । ॐ शांतिः शांतिः शांतिः । । इतिसहवैउपनिषदसंपूर्णं० ॥
। अथशिक्षोपनिषत् । श्रीगणेशा० । शन्नोमित्रशंवरुणः । शन्नोभवत्वर्यमा । शन्नइं
द्रोबृहस्पतिः । शन्नोविष्णुरुरुक्रमः । नमोब्रह्मणे । नमस्तेवायो । त्वमेवप्रत्यक्षंब्रह्मा

सि ।त्वमेवप्रत्यक्षंब्रह्मंवदिष्यामि।ऋतंवंदिष्यामि।सत्यंवंदिष्यामि। तन्मामंव
तु।तद्वक्तारमवतु। अवंतुमां।अवंतुवक्तारं। ॐ शांतिः शांतिः शांतिः। ॐ शीक्षां
व्यांख्यास्यामः। वर्णस्वरः।मात्राबलं। सामसंतानः। इत्युक्तःशींक्षाध्यायः १शी
क्षांपंचां १सहनौयशः।सहनौब्रंह्मवर्चसं। अथातःसꣳहितायाउपनिषदंव्यांख्या
स्यामः। पंचस्वधिकरणेषु। अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मं।
तामहासꣳहिताइत्याचक्षते। अथांधिलोकं। पृथिवीपूर्वरूपं। द्यौरुत्तररूपं। आ-
काशःसंधिः १ वायुःसंधानं। इत्यंधिलोकं। अथांधिज्यौतिषं।अग्निःपूर्वरूपं।
आदित्यउत्तररूपं।आंपःसंधिः। वैद्युतःसंधानं। इत्यंधिज्यौतिषं। अथांधिविद्यं।
आचार्यःपूर्वरूपं २ अंतेवास्युत्तररूपं। विंद्यासंधिः ।प्रवचनꣳसंधानं । इत्यंधि
विद्यं।अथांधिप्रजं। मातापूर्वरूपं। पितोत्तररूपं। प्रजासंधिः । प्रजनꣳसंधानं।
इत्यधिप्रजं ३ अथाध्यात्मं। अधराहनुः।पूर्वरूपं। उत्तराहनुरुत्तररूपं।वाक्संधिः

। जिव्हांसंधानं । इत्यध्यात्मं । इतिमामंहास्ंहिताः । यएवमेतामहास्ंहिताव्या
ख्यातावेद । संधीयतेप्रजंयापशुभिः । ब्रह्मवर्चसेनान्नाद्येनसुवर्ग्येणलोकेन ४सं
धिराचार्यःपूर्वरूपमित्यधिप्रजंलोकेन २ यश्छंदसामृषभोविश्वरूपः । छंदोभ्यो
ध्यमृतात्संबभूव । समेद्रोमेधयास्पृणोतु । अमृतस्यदेवधारणोभूयासं । शरीरंमे
विचर्षणं । जिव्हामधुमत्तमा । कर्णाभ्यांभूरिविश्रुवं । ब्रह्मणःकोशोसि । मेधयापिंहि
तः । श्रुतंमेगोपाय । आवहंतीवितन्वाना १ कुर्वाणाचीरमात्मनः । वासांसिमम
गावंश्च । अन्नपानेचंसर्वदा । ततोमेश्रियमावह । लोमशांपशुभिःसहस्वाहा । आ
मायंतुब्रह्मचारिणःस्वाहा । विमायंतुब्रह्मचारिणःस्वाहा । प्रमायंतुब्रह्मचारिणः
स्वाहा । दमायंतुब्रह्मचारिणःस्वाहा । शमायंतुब्रह्मचारिणःस्वाहा २ यशोजने
सानिःस्वाहा । श्रेयान्वस्यसोसानिस्वाहा । तंत्वांभगप्रविशानिःस्वाहा । समांभग
प्रविशस्वाहा । तस्मिन्त्सहस्रशाखे । निभगाहंत्वयिंमृजेस्वाहा । यथापःप्रवता-

यंतिं । यथामासांअहर्जरं । एवंमांब्रम्हचारिणः । धातरायंतुसर्वतःस्वाहा । प्रतिवे
शोसिप्रमांभाहिप्रमांपद्यस्व ३ वितन्वानाशमायंतुब्रम्हचारिणःस्वाहाधातरा-
यंतुसर्वतःस्वाहैकंच ३ भूर्भुवसुवरितिवाएतास्तिस्रोव्याहृतयः । तासामुहस्मै-
तांचतुर्थी । माहाचमस्यःप्रवेदयतेमहइतिं । तत्ब्रम्हा । सआत्मा । अंगान्यन्या
देवताः । भूरितिवाअयंलोकः । भुवःइत्यंतरिक्षं । सुवरित्यसौलोकः १ महइत्यादि
त्यः । आदित्येनवावसर्वेलोकामहीयंते । भूरितिवाअग्निः । भुवइतिवायुः । सुवरि
त्यादित्यः । महइतिचंद्रमाः । चंद्रमसावावसर्वाणिज्योतींषिमहीयंते । भूरिति
वाऋचः । भुवइतिसामानि । सुवरितियजूंषि २ महइतिब्रह्म । ब्रम्हणावावस-
र्वेवेदामहीयंते । भूरितिवैप्राणः । भुवइत्यपानः । सुवरितिव्यानः । महइत्यन्नं । अ
न्नेनवावसर्वेप्राणामहीयंते । तावाएताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रोव्याहृतयः
। तायोवेद । सवेदब्रह्म । सर्वैस्मैदेवाबलिमावहंति ३ असौलोकोयजूंषिवेदहे-

च ४ सयएषोंतरहृदयआकाशः। तस्मिन्नयंपुरुषोमनोमयः। अमृतोहिरण्मयः।
अंतरेणतालुके। यएषस्तनइवावलंबते। सेंद्रयोनिः। यत्रासौकेशांतोविवर्तते।
व्यपोह्यशीर्षकपाले। भूरित्यग्नौप्रतितिष्ठति। भुवइतिवायौ १ सुवरित्यादित्ये।
महइतिब्रह्मणि। आप्नोतिःस्वाराज्यं। आप्नोतिमनसःस्पतिं। वाक्पतिश्चक्षुष्प
तिः। श्रोत्रपतिर्विज्ञानपतिः। एतत्ततोभवति। आकाशशरीरंब्रह्म। सत्यात्मप्रा
णारामंमनआनंदं। शांतिसमृद्धममृतं। इतिप्राचीनयोग्योपास्व २ वायावमृ-
तमेकंच ५ पृथिव्यंतरीक्षंद्यौर्दिशोवांतरदिशाः। अग्निर्वायुरादित्यश्चंद्रमानक्षत्रा
णि। आपओषधयोवनस्पतयआकाशआत्मा। इत्यधिभूतं। अथाध्यात्मं। प्रा-
णोव्यानोपानउदानःसमानः। चक्षुश्रोत्रंमनोवाक्त्वक्। चर्ममाꣳस * स्नावा-
स्थिमज्जा। एतदधिविधायऋषिरवोचत्। पांक्तंवाइदꣳसर्वं। पांक्तेनैवपाङ्क *-
स्पृणोतीति १ सर्वमेकंच ६ ॐ मितिब्रह्म। ॐमितीदꣳसर्वं। ओमित्येतदनुकृ

तिहस्मवाअप्योश्रांवयेत्याश्रांवयंति । ॐ मितिसामानिगायंति । ॐ * शोमिति शस्त्राणिंश * संतिं । ॐ मित्यंध्वर्युः प्रतिगरंप्रतिंगृण्हाति । ॐ मितिब्रम्हाप्रसौ ति । ॐ मित्यंग्निहोत्रमनुंजानाति ॐ मितिब्राम्हणः प्रवक्ष्यन्नाहब्रह्मोप्रांप्नवानी- तिं । ब्रम्हैवोप्रांप्नोति १ ॐ दश ७ ऋतंचस्वाध्यायप्रवचनेच । सत्यंचस्वाध्या- यप्रवंचनेच । तपश्चस्वाध्यायप्रवंचनेच । दमश्चस्वाध्यायप्रवंचनेच । शमश्चस्वा ध्यायप्रवंचनेच । अग्नयश्चस्वाध्यायप्रवंचनेच । अग्निहोत्रंचस्वाध्यायप्रवंचनेच । अतिथयश्चस्वाध्यायप्रवंचनेच । मानुषंचस्वाध्यायप्रवंचनेच । प्रजाचस्वाध्या यप्रवंचनेच । प्रजनश्चस्वाध्यायप्रवंचनेच । प्रजातिश्चस्वाध्यायप्रवंचनेच । स- त्यमितिसत्यवचांराथीतरः । तपइतितपोनित्यःपौरुशिष्टिः । स्वाध्यायप्रवचने- एवेतिनाकौमौद्गल्य । तद्धितपंस्तद्धितपः १ प्रजाचस्वाध्यायप्रवंचनेचषट्चं १० अहंवृक्षस्यरेरिव । कीर्तिःपृष्टंगिरेरिव । ऊर्ध्वपंवित्रोवाजिनीवस्वमृतंमास्मि ।

द्रविण॑ सवर्चसं । सुमेधाअमृतोक्षितः । इतित्रिशंकोर्वेदानुवचनं १ अह॑ षट् ।
वेदमनूच्याचार्योंतेवासिनमनुशास्ति । सत्यंवद । धर्मंचर । स्वाध्यायान्माप्रमद
। आचार्यायप्रियंधनमाहृत्यप्रजातंतुंमाव्यवच्छेत्सीः । सत्यान्नप्रमदितव्यं । धर्मा
न्नप्रमदितव्यं । कुशलान्नप्रमदितव्यं । भूत्यैनप्रमदितव्यं । स्वाध्यायप्रवचनाभ्या
न्नप्रमदितव्यं १ देवपितृकार्याभ्यांनप्रमदितव्यं । मातृदेवोभव । पितृदेवोभव ।
आचार्यदेवोभव । अतिथिदेवोभव । यान्यनवद्यानिकर्माणि । तानिसेवितव्यानि-
नोइतराणि । यान्यस्माक॑सुचरितानि । तानित्वयोपास्यानि २ नोइतराणि । येके
चास्मच्छ्रेया॑सोब्राह्मणाः । तेषांत्वयासनेनप्रश्वसितव्यं । श्रद्धयादेयं । अश्रद्ध
यादेयंश्रियादेयं । ह्रियादेयं । भियादेयं । संविदादेयं । अथयदितेकर्मविचिकित्सा
वावृत्तविचिकित्सावास्यात् ३ येतत्रब्राह्मणाःसंमर्शिनःयुक्ताआयुक्तः । अलूक्षा
धर्मकामाःस्युः । यथातेतत्रवर्तेरन् । तथातत्रवर्तेथाः । अथाभ्याख्यातेषु । येतत्र

ब्राह्मणाःसंमर्शिनः। युक्ताआयुक्ताः। अलूक्षाधर्मकामास्युः। यथातेतेषुवर्तेरन्।
तथातेषुवर्तेथाः। एषआदेशः। एषउपदेशः। एषावेदोपनिषत्। एतदनुशासनं-
एवमुपासितव्यं। एवमुचैतदुपास्यं ४ स्वाध्यायप्रवचनाभ्यान्नप्रमदितव्यंतानि
त्वयोपास्यानिस्यात्तेषुवर्तेरन्सप्तच १० शन्नोमित्रःशंवरुणः। शन्नोभवत्वर्यमा।
शन्नइंद्रोबृहस्पतिः। शन्नोविष्णुरुरुक्रमः। नमोब्रह्मणे। नमस्तेवायो। त्वमेवप्रत्य
क्षंब्रह्मासि। त्वामेवप्रत्यक्षंब्रह्मावादिषं। ऋतमवादिषं। सत्यमवादिषं। तन्मामा
वीत्। तद्वक्तारमावीत्। आवीन्मां। आवीद्वक्तारं। ॐ शांतिःशांतिःशांतिः। ७।
। अथब्रह्मविदोपनिषत्प्रारंभ। श्रीगणेशायनमः। हरिःॐ। सहनाववतु। सह-
नौभुनक्तु। सहवीर्यंकरवावहै। तेजस्विनावधीतमस्तुमाविद्विषावहै। ॐ शांतिः
शांतिःशांतिः। हरिॐब्रह्मविदाप्नोतिपरं। तदेषाभ्युक्ता। सत्यंज्ञानमनंतंब्रह्म।
योवेदनिहितंगुहायांपरमेव्योमन्न। सोश्नुतेसर्वान्कामान्त्सह। ब्रह्मणाविपश्चि

तेति । तस्माद्वाएतस्मादात्मनआकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः ।
अग्नेरापः । अद्भ्यःपृथिवी । पृथिव्याओषधयः । ओषधीभ्योन्नं । अन्नात्पुरुषः । स-
वाएषपुरुषोन्नरसमयः । तस्येदमेवशिरः । अयंदक्षिणःपक्षः । अयमुत्तरःपक्षः ।
अयमात्मा । इदंपुच्छंप्रतिष्ठा । तदप्येषश्लोकोभवति १ अन्नाद्वैप्रजाःप्रजायंते । याः
काश्चंपृथिवीश्रिताः । अथोअन्नेनैवजीवंति । अथैनदपियंत्यंततः । अन्नंहिभू
तानांज्येष्ठं । तस्मात्सर्वौषधमुच्यते । सर्वंवैतेन्नमाप्नुवंति । येन्नंब्रम्होपासते । अ-
न्नंहिभूतानांज्येष्ठं । तस्मात्सर्वौषधमुच्यते । अन्नाद्भूतानिजायंते । जातान्यन्नेन
वर्द्धंते । अद्यतेत्तिचभूतानि । तस्मादन्नंतदुच्यंतइति । तस्माद्वाएतस्मादन्नरसम
यात् । अन्योंतरआत्माप्राणमयः । तेनैषपूर्णः । सवाएषपुरुषविधएव । तस्यपुरु-
षविधतां । अन्वयंपुरुषविधः । तस्यप्राणएवशिरः । व्यानोदक्षिणःपक्षः । अपान
उत्तरःपक्षः । आकाशआत्मा । पृथिवीपुच्छंप्रतिष्ठा । तदप्येषश्लोकोभवति २ प्रा-

णंदेवा अनुप्राणंति । मनुष्याःपशवश्चये । प्राणोहिभूतानामायुः । तस्मात्सर्वायु-
षमुच्यते । सर्वमेवतआयुर्यंति । येप्राणंब्रम्होपासते । प्राणोहिभूतानामायुः । त-
स्मात्सर्वायुषमुच्यंतइति । तस्यैषएवशारीरआत्मा । यःपूर्वस्य । तस्माद्वाएतस्मा-
त्प्राणमयात् । अन्योंतरआत्मामनोमयः । तेनैषपूर्णः । सवाएषपुरुषविधएव । त
स्यपुरुषविधतां । अन्वयंपुरुषविधः । तस्ययजुरेवशिरः । ऋग्दक्षिणःपक्षः । सा
मोत्तरःपक्षः । आदेशआत्मा । अथर्वांगिरसःपुच्छंप्रतिष्ठा । तदप्येषश्लोकोभवति
३ यतोवाचोनिवर्ततें । अप्राप्यमनसासह । आनंदंब्रह्मणोविद्वान् । नबिभेतिक-
दाचनेति । तस्यैषएवशारीरआत्मा । यःपूर्वस्य । तस्माद्वाएतस्मान्मनोमयात् ।
अन्योंतरआत्माविज्ञानमयः । तेनैषपूर्णः । सवाएषपुरुषविधएव । तस्यपुरुषवि-
धतां । अन्वयंपुरुषविधः । तस्यश्रद्धैवशिरः । ऋतंदक्षिणःपक्षः । सत्यमुत्तरःपक्षः ।
योगआत्मा । महःपुच्छंप्रतिष्ठा । तदप्येषश्लोकोभवति ४ विज्ञानंयज्ञंतनुते । कर्मा

णितनुतेपिंच। विज्ञानंदेवाःसर्वे। ब्रम्हज्येष्ठमुपासंते। विज्ञानंब्रम्हचेद्वेद। तस्मा
च्चेन्नप्रमाद्यति। शरीरेपाप्मनोहित्वा। सर्वान्कामान्समश्नुतइति। तस्यैषएव
शारीरआत्मा। यःपूर्वस्य। तस्माद्वाएतस्माद्विज्ञानमयात्। अन्योंतरआत्मानंद-
मयः। तेनैषपूर्णः। सवाएषपुरुषविधएव। तस्यपुरुषविधतां। अन्वयंपुरुषविधः।
तस्यप्रियमेवशिरः। मोदोदक्षिणःपक्षः। प्रमोदउत्तरःपक्षः। आनंदआत्मा। ब्रह्म
पुच्छंप्रतिष्ठा। तदप्येषश्लोकोभवति५असन्नेवसभवाति। असद्ब्रह्मेतिवेदचेत्। अ
स्तिब्रह्मेतिचेद्वेद। संतमेनंततोविदुरिति। तस्यैषएवशारीरआत्मा। यःपूर्वस्यः
अथातोनुप्रश्नाः। उताविद्वानमुंलोकंप्रेत्य। कश्चनगच्छती ३ आहोविद्वानमुंलो
कंप्रेत्य। कश्चित्समश्नुता ३ उ। सोकामयत। बहुस्यांप्रजायेयेति। सतपोतप्यत।
सतपस्तप्त्वा। इदꣳसर्वमसृजत। यदिदंकिंच। तत्सृष्ट्वा। तदेवानुप्राविशत्। त
दनुप्रविश्य। सच्चत्यच्चाभवत्। निरुक्तंचानिरुक्तंच। निलयनंचानिलयनंच।

